


SAPTHAGIRI (SANSKRIT)
SPIRITUAL ILLUSTRATED MONTHLY
Volume:10, Issue: 11
February 2024, Price Rs.20/-
No. of pages-24

तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका
फिब्रवरि - २०२४ रू. २०/-

श्रीनिवासमङ्गापुरस्थ

## श्रीकल्याणवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवाः

(फिब्रवरि 29 तः मार्च् 8 पर्यन्तम्)

# तिरुमलतिरुपतिदेवस्थानानि

23-12-2023 दिनाङ्के वैकुण्ठएकादशीपर्वदिनं पुरस्कृत्य तिरुमलक्षेत्रं भक्तजनसागरः अभवत्। भक्तानां गोविन्दनामस्मरणेन सप्तगिरयः पुनीताः जाताः। 23 दिनाङ्के प्रातः काले 1-45 समये वैकुण्ठद्वारोद्घाटनं जातम्। भक्तजनाः श्रीस्वामिनं वैकुण्ठद्वारात् दृष्टवन्तः। अस्मिन् प्रातःकाले श्रीदेवी भूदेवी समेत श्रीमलयप्पस्वामी स्वर्णरथे चतसृषु माडावीथिषु शोभायात्रायां भक्तान् कटाक्षितवन्तः।















# गीतामृतम्



श्रीभगवानुवाच -
वेदाविनाशिनं नित्यं य एन मजमव्ययम्।
कथं स पुरुषः पार्थ! कं घातयति हन्ति कम्।।

वासांसि जीर्णानि यथा विहाय
नवानि गृह्णाति नरोऽपराणि।
तथा शरीराणि विहाय जीर्णा -
न्यन्यानि संयाति नवानि देही।।

(भगवद्गीता २.२१-२२)

श्रीभगवान् उवाच हे अर्जुन!

भावः - हे पार्थ! यः पुरुषः आत्मा विकाररहितः जन्मरहितः इति जानाति सः कथं हन्तारं हन्तुं प्रेरयेत्।। कथं वा हन्यात्। मनुष्याः दुर्बलतां गतानि, धर्तुम् अयोग्यानि, सर्वात्मना छिद्रयुक्तानि वस्त्राणि त्यजन्ति। नूतनवस्त्राणि गृह्णन्ति। तथैव आत्मा जीर्णानि शरीराणि परित्यज्य अन्यानि शरीराणि गृह्णाति।

## सङ्कीर्तनम्

राजीवनेत्राय राघवाय नमो
सौजन्यनिलयाय जानकीशाय ।।राजीव।।

दशरथतनूजाय ताटकदमनाय
कुशिकसम्भवयज्ञगोपनाय
पशुपतिमहाधनुर्भञ्जनाय नमो
विशदभार्गवरामविजयकरणाय ।।राजीव।।

भरितधर्माय शूर्पणखाङ्गहरणाय
खरदूषणादिरिपुखण्डनाय
तरणिसम्भवसैन्यदक्षकाय नमो
निरुपममहावारिनिधिबन्धनाय ।।राजीव।।

हतरावणाय संयमिनाथवरदाय
अतुलितायोध्यापुराधिपाय
हितकरश्रीवेङ्कटेश्वराय नमो
विततवाविलिपाटिवीररामाय ।।राजीव।।



(अन्नमाचार्यसङ्कीर्तनम्)

सम्पादकीयम्

# इदानीमेव जागृयाम

**अर्थागमो नित्यमरोगता च प्रिया च भार्या**
**प्रियवादिनी च वश्यश्च पुत्रोऽर्थकरी च**
**विद्या षड्जीवलोकस्य सुखानि राजन् ।।**

-(महाभारतम्, उद्योगपर्व)

नित्यं धनप्राप्तिः, सर्वदा आरोग्यं, प्रियं भाषमाणा मनसो इष्टा च भार्या, एवं वचनकरः पुत्रः, धनार्जनोपयोगिनी विद्या इत्येते षट् सुखकराः अंशाः इति महाभारत सूक्तिः। एतेषां षण्णां मध्ये द्वितीयः अंशः आरोग्यम्। तत् अतीव सुखजीवनस्य आवश्यकम्। सति आरोग्ये इतरेषाम् अंशानाम् असत्वे अपि सुखेन जीवितुं शक्यते। पञ्चसु अंशेषु सत्स्वपि आरोग्यस्य असत्वे सुखजीवनम् न भवत्येव। पूर्वदिनेषु मनुष्याः आजानुबाहवः, दृढकायाः, आरोग्यवन्तः दीर्घायुष्मन्तः इति श्रोतुं, वक्तुं च वयं गर्वमनुभवामः। परन्तु अद्यतनकाले अनेके परिणामाः जातास्सन्तः मानवजीवनं दुःखमयं कुर्वन्ति। एतेषु परिणामेषु कदापि अश्रुताः, अदृष्टाश्च रोगाः हठात् प्रविश्य बहुकालं तिष्ठन्तः मानवजीवनं दुर्भरं कुर्वन्ति। सहस्रशः महामार्यः उत्पाताश्च प्रपञ्चे व्याप्नुवन्ति। तादृश एव २०१९ मध्ये सम्प्राप्ता करोनानाम्नी महामारी। एषा भुवि प्रविश्य समस्त मानवजीवनम् आपत्सु क्षिप्तवती। महासंक्षोभं सृष्टवती। निद्रां दूरीकृतवती सर्वमपि प्रपञ्चं गृहे एव निर्बद्धवती। राक्षसीय कालस्सह जनपदानि ग्रामाः नगराणि देशाश्च मृत्युघोषेण विलपन्तः आसन्। अस्माकं जीवनकाले अतिभयङ्कर विषादमयः कालः सः। माहामार्याः करोनायाः प्रथमा दशा समाप्ता। मुखे आच्छादन वस्त्रं धृत्वा यथा कथञ्चित् किञ्चिदाश्वासनस्य प्राप्तौ सत्यां हठात् द्वितीया दशा अतिभयङ्करी उपरि पतित्वा मारणहोमम् असृजत्। भगवतः दयया, नारायण स्वरूपाणां वैद्यानां दयया तादृश महामारीभ्यः कथञ्चित् वयं बहिरागताः। परन्तु परिपूर्णतया करोनायाः स्वरूपनाशः असम्भवः इति, अतः सा यथा अस्मान् नाक्रमिष्यति तथा प्रागेव जागृतिः एव एकाकी परिष्कार मार्गः इति वैद्यवर्गाः, सर्वकाराश्च उच्चैः घोषयन्तिस्म। अस्य वास्तविकतां निरूपयन्ती करोना तदा तदा व्याकुलतां सृजत्येव। बहुषु प्रदेशेषु राज्येषु पुनः करोनाविजृम्भणं श्रवणगोचरीभवति। सा मृत्युजिह्वां प्रसार्य पिशाचीव मानवप्रपञ्चस्य उपरि पतितुं सज्ज़ाभवति। करोना विषाणु सम्बन्धिनः नूतन वेरियन्ट् JN1 अंशाः प्रकटीभवन्ति। वैद्याः एतद् वेरियन्ट् न प्राणिहानिकरं वदन्ति। तावन्मात्रेण न अश्रद्धा करणीया। प्रमत्तता नाश्रयणीया। मुखाच्छादन वस्त्रधारणं पुनः पुनः हस्तयोः प्रक्षाळनं सामाजिक दूरपरिपालनम् इत्येते अंशाः प्रजारोग्यस्य श्रीरामरक्षा भवन्ति।

JN1 सब् वेरियन्ट् विषये प्रजानाम् अभयम् अव्याकुलतां च प्रदाय सर्वान्तर्यामी श्री श्रीनिवासः सर्व मानवाळिं रक्षतु इति प्रार्थनां कुर्वन्तः, हनुमत्सीतालक्ष्मण समेत श्रीरामचन्द्रप्रभुं सर्वदा स्मरन्तः मनसः स्थैर्यं, धैर्यं वर्धयाम इत्याकांक्षा।

**।।सर्वे जनाः सुखिनो भवन्तु**
**सर्वे सन्तु निरामयाः।।**

# फिब्रवरि २०२४

सम्पुटिः-१० सञ्चिका-११

श्रीशोभकृत्संवत्सरस्य पुष्यकृष्णषष्ठी तः

श्रीशोभकृत्संवत्सरस्य माघकृष्णपञ्चमी पर्यन्तम्-१९४४



मुखचित्रम् - श्रीकल्याणवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवाः, श्रीनिवासमङ्गापुरम्।

अन्तिमरक्षापुटः - श्रीलक्ष्मीवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवाः, देवुनि कडप।

## सङ्केतः

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९,
२२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org

एका पत्रिका : रू.२०/-
वार्षिकग्राहकत्वम् रू.२४०/-
आजीविक ग्राहकत्वम् रू.२४००/-

वेङ्कटाद्रिसमं स्थानं
ब्रह्माण्डे नास्ति किञ्चन ।
वेङ्कटेशसमो देवो
न भूतो न भविष्यति ॥

तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका

गौरवसम्पादकः-
श्री ए.वी.धर्मारेड्डि I.D.E.S.,
कार्यनिर्वहणाधिकारी (F.A.C.),
ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः-डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी,
ति.ति.दे.मुद्रणालयः,
तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः,
छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः,
सहायक-छायाचित्रग्राहकः, ति.ति.दे.





# रथसप्तमी पर्व-अर्ध ब्रह्मोत्सवाः


तेलुगु मूलम्, - श्री भूमन करुणाकररेड्डि,

अध्यक्षः, ति.ति.दे. पालकमण्डली


**रथसप्तमीपर्व-** श्रीनिवासस्य अर्धब्रह्मोत्सवाः - सनातनसंस्कृतौ भगवतः सूर्यस्य स्थानम् अद्वितीयं महिमा च अद्वितीयः। वेदपुराणेतिहासकाव्यादयः सूर्यस्य महिमानं विस्तरेण प्रतिपादयन्ति। भगवान् सूर्यः प्रत्यक्षदैवम्। सूर्यस्य त्रिकालस्वरूपाणां स्मरणेन विशिष्टस्य गायत्री महामन्त्रस्य उपासना सकलाः दुर्दशाः नाशयति। सौरशक्तेः सम्बन्धि बहु विज्ञानं वेदगतेषु सूर्यमन्त्रेषु निक्षिप्तम् अस्तीति पाश्चात्यवैज्ञानिकाः अपि संलक्ष्य परिशोधनं कुर्वन्ति। सूर्यः प्रत्यहं सर्वेषां लोकानां चक्षुर्गोचरः परब्रह्म, सकलविश्वस्य आत्मा। सूर्योपनिषदि प्रथममन्त्रतः आरभ्य चतुर्थमन्त्रपर्यन्तं विद्यमानाः मन्त्राः सूर्यं सकलसृष्ट्युतुत्पादकं वर्णयन्ति। पोषकः इति च वर्णयन्ति। अरुणोपनिषदः पारायणेन विजयः प्राप्यते, आरोग्यं लभ्यते। रोगनिवारणं च भवति।

स्वीयोदयेनैव सूर्यः सर्वं लोकं नित्यकर्मसु प्रेरयति। अतः एव सूर्यः जगच्चक्षुरिति कर्मसाक्षीति च गीयते। सूर्य एव सर्वैः कृतानां क्रियमाणानां कर्मणां शुभाशुभात्मकानां साक्षी भवति। अतः एव अस्माभिः शुभप्रदानि, पुण्यप्रदानि च कर्माण्येव क्रियेरन् इति प्रबोधयति। अतः सर्वदा पुण्यकर्मकरणबुद्धिं प्रसादयितुं सूर्यः प्रार्थनीयः। सूर्यः सकलदेवतास्वरूप इति वेदाः पुनः पुन उपदिशन्ति। सूर्यः एव कालचक्रस्य मूलम्। सूर्यप्रभावादेव षड्ऋतवः भवन्ति। सकलस्य कारणभूतः सूर्य एव। अत एव ''ॐ आदित्याय विद्महे सहस्रकिरणाय धीमहि, तन्नस्सूर्यः प्रचोदयात्। इत्येवंरूपेणे सूर्यगायत्रीमन्त्रेण नित्यं सूर्यम् आराधयन्ति भारतीयाः।

**एष ब्रह्मा च विष्णुश्च शिवः स्कन्दः प्रजापतिः।**
**महेन्द्रो धनदः कालो यमस्सोमो ह्यपां पतिः।।**
**एन मापत्सु कृच्छ्रेषु कान्तारेषु भयेषु च।**
**कीर्तयन् पुरुषः कश्चित् नावसीदति राघव।।**

इति वाल्मीकरामायणे युद्धकाण्डे अगस्त्यः रामाय आदित्यहृदयस्तोत्रम् उपदिष्टवान्। भगवतः सूर्यस्य विराड् रूपं विवृण्वन् सर्वदेवतास्वरूपः सूर्यः इत्युच्यते। अतः येन येन रूपेण यं यं वयमुपास्महे तत्सर्वमपि सूर्योपासनमेव भवति। आपद्ग्रस्तः अपि कान्तारेषु दिग्भ्रान्त्या भ्रमन्नपि रुग्णः अपि जनः सूर्योपासनया तत्तत्क्लेशजातात् अवश्यं मुक्तः सुखी च भविष्यति। **''ॐ नमो नारायणाय''** इत्यष्टाक्षरीमन्त्रं श्रद्धया जपन्



सूर्याय अर्घ्यप्रदानं कृत्वा मनः एकाग्रं कृत्वा भक्त्या श्रद्धया च नित्यं १०८ पर्यायान् सूर्यस्य स्मरणं क्रियते चेत् सूर्यानुग्रहः अवश्यं लप्स्यते। रथसप्तमीदिने सूर्यकिरणाः अधिकतया भूमौ पतन्ति। अस्मात् दिवसादेव सूर्ये गमनपरिवर्तनं जायते। रथसप्तमी सूर्यजन्मदिवसत्वेन भारतीयाः मन्यन्ते। रथसप्तमीदिवसे क्षीरान्नं सूर्याय निवेद्य तत् गोश्णीपत्रे निक्षिप्य खादन्ति। गोश्णीलता, अर्कलता च सूर्यसम्बन्धिन्यौ लते, विलक्षणा औषधशक्तिरपि तत्र जागर्ति। एते उभे अपि देवतालते। अतः सूर्यशक्तिम् अधिकतया गृह्णीतः। अतः तद्द्वारा भगवते निवेदितस्य प्रसादस्य स्वीकरणं देहमनसोः आरोग्याय भवतीति निश्चयः।

रथसप्तमीदिवसे प्रातःकाले क्रियमाणः स्नानविधिः महर्षिभिः वैज्ञानिकतया उपदिष्टः। तस्मिन् समये शीतोदकेन स्नानं विहितम्। तदा शिरसः उपरि सप्त अर्कपत्राणि स्थापयित्वा तेषु बदरीफलानि त्रीणि, एवं कतिचन तण्डुलान् च निक्षिप्य सूर्यस्मरणपूर्वकं स्नानं करणीयम्। पञ्चाङ्गरचयितारः रथसप्तमीदिवसं सूर्यजयन्तीति निश्चयं कुर्वाणाः अस्मात् दिवसात् उत्तरस्यां दिशि सूर्यकान्तिः अधिकतया वर्तते इति नक्षत्राणि आकाशे रथाकारेण तिष्ठंतीति, ततः तस्मिन् सूर्याराधानतः बहूनि शुभानि भवन्तीति उपदिशन्ति।

सूर्यस्य द्वादश प्रसिद्धानि नामानि सन्ति। द्वादशादित्याः प्रसिद्धाः। द्वादशानां द्वादश नामानि।

१)मित्रः - सूर्यः लोकस्य मित्रम्। सर्वे प्राणिनः प्रतिदिनं सूर्यदर्शनं वाञ्छन्ति। केचन उष्ट्रपक्षिसदृशाः सूर्यं द्विषन्ति, तथापि सूर्याभावे ते अपि जीवितुं न शक्नुवन्ति।

अतः सूर्यं दृष्ट्वा सत्कार्याणि कुर्वाणाः मानवाः सूर्यानुग्रहं प्राप्य आरोग्यं, बुद्धिबलम्, अभीष्टकार्यसिद्धिं, दीर्घमायुः, सम्पदः प्राप्स्यन्ति इत्यत्र नास्ति संशयः

२)रविः - सर्वैः स्तूयते, रूयते इति रविः। चतुर्मुखब्रह्मणः वेदान् उपदिष्टवान् सूर्यः। नारायणस्य नाभिकमलात् जाताय ब्रह्मणे वेदानुपदिश्य वेदानां व्यापकोऽभवत्।

३)सूर्यः - सुवति प्रेरयति व्यापारेष्विति सूर्यः प्राणिनः, स्वीयकार्येषु, प्रवर्तयति। प्रेरकत्वं, शक्तिप्रदातृत्वं सूर्यस्य लक्षणानि।

४)भानुः - भातीति भानुः - प्रकाशमानः। प्रकाशमान एव लोकं प्रकाशयति।

५)खगः - खं गच्छतीति खगः - आकाशमधिष्ठाय तिष्ठति। आकाशे तिष्ठन् सर्वं प्रपञ्चं स्वकान्त्या प्रचोदयति।

६)पूषा - पुष्णातीति पूषा - लोकं पोषयति। स्वकान्त्या लोके सर्वत्र ओषधिविशेषान् पोषयित्वा सर्वेषामपि जीवना धारभूतमन्नं प्रदाय लोकं जीवयति।

७)हिरण्यगर्भः - गर्भे उदरे हिरण्यं नाम सुवर्णं तद्वान्। प्रलयकाले सर्वान् प्राणिनः हिरण्यमयान् कृत्वा स्वगर्भे संस्थाप्य सृष्टि समये तान् सर्वान् विश्वं प्रापयति।

८)मरीचिः - मरीचिर्नाम किरणः। मरीचिमान् नाम किरण-समूहवान्। अन्धकारमपाकर्तुमेवं व्याधिरूपान् अन्धकारांश्च निष्कासयितुं सामर्थवान्।

९)आदित्यः - अदितिर्देवानां माता। तस्याः पुत्रः आदित्यः आदित्यात् एव लोकास्समस्तानि फलानि प्राप्नोति। समस्तवस्तूनां प्रकाशकः पुण्यमूर्तिरादित्यः।

१०)सविता - समस्तं विश्वं सृष्ट्वा सर्वेषां प्राणिनां जीवनधारः भूत्वा आनन्दं प्रददाति।

११)अर्कः - लोके प्रथमं स्तवनीयः सूर्यः। ततः एव सूर्य नमस्काराः क्रियमाणाः आनन्दम् आरोग्यं च प्रापयन्ति।

१२)भास्करः - सूर्यस्य अनुग्रहादेव दृश्यप्रपञ्चे विद्यमानान् सर्वानपि वयं ग्रहीतुं शक्नुमः। सूर्याराधनादेव वयं सर्वे लोके विद्यमानानि सृष्टिरहस्यानि ज्ञातुं शक्नुमश्च।

एवमनेकरहस्यार्थं युक्तानि एतानि द्वादश नामानि महिमान्वितानि भवन्ति। अतः अंततो गत्वा रथसप्तमीपर्वदिने एतानि नामानि अवश्यं स्मरेम।

कलियुगवैकुण्ठे तिरुमलपुण्यक्षेत्रे एतत् माघसप्तमीपर्व अत्यन्तवैभवेन निर्वहन्ति अर्चकस्वामिनः। श्रीनिवासप्रभुं सप्तसु वाहनेषु रथापयित्वा शोभायात्रां निर्वर्त्य चक्रस्नान निर्वहणम् आगमसम्प्रदायः। १५६४ संवत्सरतः श्रीनिवासस्य अर्धब्रह्मोत्सवरूपेण रथसप्तमी पर्वोत्सवाः प्रचलन्तिस्म इति शासनद्वारा ज्ञायते। रथसप्तमी पर्वदिने सूर्यप्रभावाहनम् आयुरारोग्यादिकमनुगृह्णाति। लघुशेषवाहनं विषतुल्यानि पापानि नाशयति। गरुडवाहनं दास्यभक्तिं प्रददाति। हनुमद्वाहनं कार्यसिद्धिं कल्पयति। कल्पवृक्षवाहनं अभीष्टसिद्धिं ददाति। सर्वभूपालवाहनम् अधिकारसम्पदः ददाति। चन्द्रप्रभावाहनम् आध्यात्मिक-आधिदैविक- आधिभौतिकतापान् निवारयति। वाहनानाम् एतादृशी शक्तिः भवति अधिष्ठितवतः श्रीनिवासदेवतः श्रीनिवास-श्रीमन्नारायणयोः अभेदं भावयन्तः महात्मानःतदुभयरूपेण विराजमानं सूर्यमुपास्य कृतार्थाः भवन्ति। वयमपि सूर्यात्मना प्रकाशमानं श्रीश्रीनिवासप्रभुमाराध्य उपास्य स्तुत्वा अस्मज्जीवनं कृतार्थयामः।

**संस्कृतानुवादः - के.एल्.गायत्री**
**चरवाणी - ७५६९९११६६०**





- ओरुगण्टि सीता
चरवाणी - ९३९३११०२८६

# भक्ताग्रगण्ये कुन्तीद्रौपद्यौ

**अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्।।**

साक्षात् भगवता अर्जुनाय उपदेशीभूतोऽयं श्लोकः भगवद्गीतायां लोकप्रसिद्धः -

ये देहेन्द्रियादीतरचिन्तनानासक्ताः नित्यानित्यवस्तुविवेकिनः सदा परमात्मानुसन्धानरता भक्ताः, तेषामेव सुख दुःखादि समस्त भारं वहामि इति (इतरेषां सर्वेषाम्) तात्पर्यमपि सर्वे जानन्त्येव। एवं भक्तानां लक्षणानि भगवानेव उक्तवान्। **''भक्तप्रिया भक्तिगम्या भक्तिवश्या भयापहा''** इति श्रीललितासहस्रनामस्वपि विद्यते। इदानीं भक्तिर्नाम का इति विचारयामः। मोक्षप्राप्तेः कर्म ज्ञान भक्ति योगाः इति त्रयः मार्गाः प्रदर्शिताः महात्मभिः एतेषां भक्तिरेव सुलभतया भासते। नारदभक्तिसूत्रेषु-साऽपि कर्मज्ञानयोगेभ्योऽप्यधिकतरा इत्युक्तं सा भक्तिः इतरमार्गेभ्यः अत्यन्त महत्त्वपूर्णा इत्यर्थः **अध्यात्मरामायणे एवमुक्तम् -**

**भक्ति र्जनयित्री ज्ञानस्य भक्तिर्मोक्षप्रदायिनी।**
**भक्तिहीनेन यत्किञ्चित् कृतम् तत्स्या असत्समम्।।**

भक्तिद्वारा ज्ञानं प्राप्यते ज्ञानं मोक्षं ददाति (ज्ञानादेव कैवल्यमिति सिद्धान्तः) भक्तिं विना यत्किञ्चित् कृतं तत् सर्वं व्यर्थमेव इति सारांशः। श्री जगद्गुरुशङ्कराचार्यस्वामिना विवेकचूडामणिग्रन्थे - ''मोक्षसाधनसामग्र्यां भक्तिरेव गरीयसी'' इति प्रतिपाद्य अनन्तरमेव - स्वस्वरूपानुसन्धानं भक्तिरित्यभिधीयते'' इत्युक्तं भज्यते इति भक्तिः जीवेश्वरयोः ऐक्यमेव अर्थात् अद्वैतसिद्धिरेव भक्तिः इत्युच्यते (पूर्वोक्त अनन्याश्चिन्तयन्तोमाम् इति भगवता यदुक्तं तत्रापि इदमेव तात्पर्यम् इति ग्राह्यम्।)

नारद पञ्चरात्रे 'अनन्यममता विष्णौ ममता प्रेमसंगता भक्तिः इत्युच्यते सर्वव्यापके भगवति परमात्मनि अत्यन्त ममकारस्वरूपी प्रेमा एव भक्तिरित्यर्थः। तैलधारवत् यस्य मनः परमात्मनि तिष्ठति सा एव भक्तिरिति, भक्तिरसायने निर्वचनं दत्तम्। तथैव नारदभक्तिसूत्रेष्वपि

सा तु अस्मिन् परमप्रेमरूपा इत्युक्तम्

व्यासमहर्षिः ज्ञानप्राधान्येन ब्रह्मसूत्राणि प्रदर्श्य

भक्तिप्रधानतया श्रीमद्भागवतमपि रचितवान्। भागवतं नाम भगवद्भक्तानां कथाः एव इति वक्तुम् उचितम्। तादृश भक्तानां मध्ये पाण्डुराजस्य धर्मपत्नी पाण्डवानां माता कुन्तीदेवी अग्रगामिनी इति वचने स्तवः नास्ति वास्तवमेव। तत् कथमिति पश्यामः - श्रीकृष्णपरमात्मा पाण्डवान् आबाल्यात् दुर्योधनादि दुष्टराजकीयसम्बन्धिवनवासादिकष्टेभ्यः अपि च अश्वत्थाम्नः अस्त्रात् तेषाम् एकैकवंशाङ्कुरमपि रक्षितवान्। ततः परमात्मनः द्वारकानगरं प्रति प्रस्थानसमये (प्रयाणसमये) कुन्ती माता एवं प्रार्थना कृतवती।

''विपदस्सन्तु नश्शश्वत् तत्र तत्र जगद्गुरो! भवतो दर्शनं यत् स्यात् अपुनर्भवदर्शनम्'' (पुनः पुनः) अस्माकं सदा आपदः एव आगच्छन्तु आपत्समयेषु अवश्यं तव दर्शनभाग्यं लभ्यते। तेनैव अस्य असारसंसारस्य वासना नश्यति खलु'' इति। अपि च -

''अथ विश्वेश! विश्वात्मन्! विश्वमूर्ते! स्वकेषु मे स्नेहपाशम् इमं छिन्धि दृढं पाण्डुषु वृष्णिषु''

हे जगन्नायक! अस्य नामरूपात्मकचराचरसृष्टेः अधिनायक! हे समस्तजगत्स्वरूप स्वकीयेषु पाण्डवेषु मातृवंशीय यादवेषु च दृढतया विद्यमानस्य मम ममकारबन्धनस्य छेदनं निश्शेषतः कुरु इति। अनेन अस्याः वैराग्यम् (असंगता आराधने आर्तिः सुस्पष्टमेव खलु। परमात्मदर्शनेन अविद्या(अज्ञानम्) अखिलं नश्यति समस्तसंशयाः निर्गच्छन्ति स्वकृत पापपुण्यानां सर्वकर्मफलं क्षीयते स्वस्वरूपज्ञानं प्राप्यते। अत एव कुन्तीमात्रा एवं प्रार्थना क्रियते। एतदेव मुण्डकोपनिषदि च व्यासमहर्षिणा प्रतिपादितम्

''भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे'' इति। अपि च गुरुगीतायामपि उक्तम्

**सच्चिदानन्दरूपाय व्यापिने परमात्मने।**
**नमःश्रीगुरुनाधाय अविद्याग्रन्थिभेदिने।।**

इदानीं द्रौपद्याः औन्नत्यं विचारयामः। महाभारतयुद्धे अनेके वीराधिवीराः स्वर्गवासंगताः। युद्धभूमौ अतिदुःखेन चरमावस्थायां स्थिताय दुर्योधनाय प्रीतिम् उत्पादयितुम् अश्वत्थामा द्रौपद्याः पुत्राणाम् उपपाण्डवानां, सोदरस्य धृष्टद्युम्नस्य शिरांसि अखण्डयत्। ते सर्वे निद्रावस्थायामेव पञ्चत्वं गतवन्तः। तान् दृष्ट्वा दुःखसमुद्रे निमग्नाम् अत्यन्तपरितप्यमानां द्रौपदीं प्रति अर्जुनः श्रीकृष्णेन साकं ''हे द्रौपदि! मा रोदीः, अस्माकं दुःखनिवारणार्थम् अस्य घोरकर्मणः कर्तारम् अश्वत्थामानं बद्ध्वा इदानीमेव तव पादार्पणं करोमि'' इत्युक्त्वा तथैव अकरोत्। हीनातिहीनकर्म आचरितवन्तमपि अश्वत्थामानं दृष्ट्वा महति कष्टे स्थितापि पतिव्रता द्रौपदी संयमनेन उक्तवती मुच्यतां मुच्यताम् एष न हन्तव्यः ब्राह्मणोत्तमः गुरुपुत्रः गुरुणा तुल्यः खलु (स एष भगवान् द्रोणः प्रजारूपेण वर्तते) अपि च अहं पुत्रशोकेन (गर्भशोकेन) निरन्तरं यथा दुःखानुभाविनी तथा अस्य मातुः पतिदेवतायाः गौतम्याः कृपेः गर्भशोकः मा भूत् मा भूत् इति। अनेनैव व्यज्यते अस्याः निष्कामभक्तितत्परता। भगवद्गीतायाम् उत्तमभक्तानां लक्षणानि साक्षात् भगवता एवं प्रदर्शितानि....

**अद्वेष्टा सर्वभूतानां मैत्रःकरुण एव च।**
**निर्ममो निरहङ्कारः समदुःखसुखः क्षमी।।।**

एतेषाम् उत्तमभक्तलक्षणानां लक्ष्यभूता एव द्रौपदी। अतएव भागवतमहापुराणे वर्णितानाम् अनेकेषां भक्तानां मध्ये प्रथमगणनीया एषा द्रौपदी।





# भगवदवतारः धन्वन्तरिः

- आचार्य जी. पद्मनाभम्
चरवाणी - ९२४७३२८२८६

धन्वन्तरिः - धन्वन्तरिः इति नाम भारतदेशसंप्रदायरचनासु कथासु चतुर्विधात्मना संश्रूयते तत्र एकः -

१.भागवते क्षीरसागरमथनसमये अमृतकलशहस्तेन उद्भूतः श्रीमहाविष्णोरवतारः एकः।

२. ब्रह्मवैवर्तपुराणमनुसृत्य भगवतः सूर्यात् आयुर्वेद -मधीतवान् धन्वन्तरिः एकः वर्तते। अयं सूर्यस्य षोडशशिष्येषु एकः।

३. धन्वन्तरिबिरुदाङ्कितः काशीराजः दिवोदासः एकः वर्तते। अयं सुश्रुतस्य आयुर्वेदशस्त्रचिकित्साञ्च अध्यापयमास। अयमेव पुराणोक्तधन्वन्तर्यवतारः एवेति विश्वासोऽप्यस्ति।

४.चन्द्रगुप्तविक्रमादित्यास्थाने नवरत्नानीति प्रसिद्ध पण्डितेषु प्रतिभावत्सु अयमेकः धन्वन्तरिः। अयं धन्वन्तरि निघण्टुनाम्ना वैद्यपारिभाषिकपदकोशग्रन्थमपि व्यरचयदिति प्रथा वर्तते।

न केवलमेवं - प्राचीनकाले सुप्रसिद्धायुर्वेदवैद्यान् धन्वन्तरि बिरुदाङ्कितान् कृत्वा सन्मानयन्ति स्म। अस्माद्धेतोः विविध धन्वन्तरिकथाः मिश्रिताः दृश्यन्ते।

धन्वन्तरिशब्दव्युत्पत्तिः - धनुः शल्यं, तस्य अन्तः पारम् एति गच्छतीति धन्वन्तरिरिति व्युत्पत्तिः। मनसःशरीरस्य च बाधाकारकशल्यदोषान् व्रणादीन् निवारणकर्ता इति वक्तुं शक्यते। पुरातनकालादारभ्य भारतदेशे शस्त्रचिकित्साकुशलिनः धन्वन्तरयः इति व्यवहारोऽपि प्रचारे दृश्यते।

**भागवतगाथा -** भागवते अष्टमस्कन्धे क्षीरसागरमथनसमये आदौ हालाहलः उद्भूतः। महादेवः तं पपौ। उच्चैश्रवाः ततः कामधेनुः, ऐरावतः पारिजातम् अप्सरसः उद्भूताः। पश्चात् रमादेवी उद्भूय विष्णोः वक्षःस्थलमलङ्कृतवती। ततः पश्चात् धन्वन्तरिः उद्भूतः।

तदा सागरगर्भादेकः पुरुषः पीनायतबाहुदण्डः, कम्बुकण्ठः पद्मारुणलोचनः विशालवक्षःस्थलः सुवर्णकेशजालेन नीलगात्रतेजसा भूषितः पीताम्बरं मणिकुण्डले च धृत्वा पुष्पमालालङ्कृतः हस्ततलेन अमृतकलशं गृहीत्वा आविर्बभूव। सः विष्णोरंशजातः इति, यज्ञभागभोजनः, आयुर्वेदज्ञः महनीयः इति ब्रह्मादयः ज्ञात्वा तस्य धन्वन्तरिः इति नाम कृतवन्तः।

**काशीराजदिवोदासधन्वन्तरिः -** भागवते नवमस्कन्धे पुरूरवसः वंशचरित्रे काशीराजधन्वन्तरिमधिकृत्य गाथा वर्तते। (९-१७-४) तदनुसृत्य परूरवसः क्षत्रवृद्धः, तस्य सुहोत्रः, सुहोत्रस्य काश्यः, काश्यस्य काशिः, काशेः दीर्घतपाः दीर्घतपसः धन्वन्तरिः जातः इति वर्तते। धन्वन्तरिः हरेरंशेन प्रादुर्भूय आयुर्वेदप्रवर्तकः अभूत्। विष्णुपुराणेऽपि अयं वंशक्रमः वर्तते। धन्वन्तरिः आयुर्वेद शास्त्रम् अष्टाङ्गत्वेन विभक्तवान्।

१. कायचिकित्सा २. कौमारभृत्य बालचिकित्सा ३. भूतवैद्यम् ४. शलाक्यतन्त्रम् ५. शल्यतन्त्रम् ६. विषतन्त्रम् ७. रसायनतन्त्रम् ८. वशीकरणतन्त्रम्।

अयं धन्वन्तरिः काशीराज दिवोदास-धन्वन्तरेः नप्ता भवेत्। दिवोदास धन्वन्तरिणा आयुर्वेदग्रन्थः शल्य सलाक्य सम्बन्धी विरचितः नवेति न ज्ञायते। प्रायशः चिकित्सा तत्त्वविज्ञानम् चिकित्सादर्शनमिति द्वौ गन्थौ धन्वन्तरिदिवोदासेन कृताविति, चिकित्साकोमुदी तु काशीराजरचनैव स्यादिति मन्तव्यम्। सुश्रुतकृतः सुश्रुतसंहिता ग्रन्थः अद्य लभ्यमानः काशीराजबोधनाधारितः इति समूह्यते। एभिः ग्रन्थैः तेषु प्राचीनदिनेष्वपि शास्त्रीयविधानानि सुस्पष्टं प्रसिद्धान्यासन्निति ज्ञायते।

**प्रत्यक्ष -** अनुमान उपमान प्रमाणान्यधिकृत्यापि तत्र प्रोक्तम्। शल्यतन्त्र शालाक्यतन्त्रमिति द्विविध शस्त्रचिकित्सा विधानयोः काशीराजदिवोदास धन्वन्तरिः आद्यः भवेदिति मन्यन्ते। अयं क्रिस्तोः पूर्वं ३००० कालसम्बन्धीति द्वारकानाथः अभिप्रैति परन्तु निरूपणं कालसम्बन्धि कष्टतरमेव

आलयाः - धन्वन्तर्यालयाः विरलाः एव। वारणासी संस्कृतविश्वविद्यालयपुरावस्तुशालायाम् एकः धन्वन्तरि विग्रहः वर्तते। देहली आयुर्वेद सिद्धपरिशोधनमण्डली केन्द्रे एकः महान् एकः अल्पः च विग्रहौ वर्तेते।

तमिलनाडु श्रीरङ्गनाथस्यालयावरणे धन्वन्तरिमन्दिरे नित्यपूजाः प्रवर्तन्ते। मन्दिरशिलाफलकमनुसृत्य सः विग्रहः क्रिस्तोरनन्तरं द्वादशशताब्दीकः भवति। तदा महान् आयुर्वेदः विद्वान् गरुडवाहनभट्टरु अस्मिन् मन्दिरे धन्वन्तरिमूर्तिं प्रतिष्ठितवानिति ज्ञायते। अत्र तीर्थत्वेन मूलिकाकषायमपि ददति।

केरलराष्ट्रे गुरुवायूरु विन्सूरु मध्ये २० कि.मी दूरे नेल्लुकाय इति ग्रामे एकः धन्वन्तर्यालयः वर्तते। गुरुवायूरुदेवस्थानवत् अयं पुरातनालयः इति मन्वते। वैद्याः चिकित्सावृत्तिप्रारम्भात् पूर्वं मन्दिरमेत् गत्वा पूजामाचरन्ति।

केरलराष्ट्रे कालिकट् पट्टण परिसरेषु धन्वन्तरिक्षेत्रमेकं वर्तते। इदं मन्दिरं अधिकजनैः आद्रियते। व्याधिनिवारणार्थं बहवः अत्र आगत्य दैव दर्शनप्रार्थनानि कुर्वन्ति।

आन्ध्रप्रदेशेऽपि गोदावरिमण्डलस्थचिन्तलूरुग्रामे प्रसिद्ध धन्वन्तरिदेवालयः वर्तते।

कर्णाटकराष्ट्रे बेङ्गलूरुस्थ यश्वन्तपुरस्य गायत्रीदेवस्थाने धन्वन्तरिदेवालयः एकः प्रसिद्धः संदृश्यते।

ओं नमो भगवते वासुदेवाय धन्वन्तरये
अमृतकलशहस्ताय वज्रजलौकहस्ताय।
सर्वामयविनाशाय त्रैलौक्यनाथाय
श्रीमहाविष्णवे नमः।।



# श्री सूर्याष्टकम्

तिरुमलतिरुपतिदेवस्थानानि

आदिदेव नमस्तुभ्यं प्रसीद मम भास्कर।
दिवाकर नमस्तुभ्यं प्रभाकर नमोऽस्तु ते॥

सप्ताश्वरथमारूढं प्रचण्डं कश्यपात्मजम्।
श्वेतपद्मधरं देवं तं सूर्यं प्रणमाम्यहम्॥

लोहितं रथमारूढं सर्वलोकपितामहम्।
महापापहरं देवं तं सूर्यं प्रणमाम्यहम्॥

त्रैगुण्यं च महाशूरं ब्रह्मविष्णुमहेश्वरम्।
महापापहरं देवं तं सूर्यं प्रणमाम्यहम्॥

बृंहितं तेजसां पुञ्जं वायुमाकाशमेव च।
प्रभुं च सर्वलोकानां तं सूर्यं प्रणमाम्यहम्॥

बन्धूकपुष्पसंकाशं हारकुण्डलभूषितम्।
एकचक्रधरं देवं तं सूर्यं प्रणमाम्यहम्॥

विश्वेशं विश्वकर्तारम् महातेजप्रदीपनम्।
महापापहरं देवं तं सूर्यं प्रणमाम्यहम्॥

तं सूर्यं जगतां नाथं ज्ञानविज्ञानमोक्षदम्।
महापापहरं देवं तं सूर्यं प्रणमाम्यहम्॥

सूर्याष्टकं पठेन्नित्यं ग्रहपीडाप्रणाशनम्।
अपुत्रो लभते पुत्रं दरिद्रो धनवान्भवेत्॥

आमिषं मधुपानं च यः करोति रवेर्दिने।
सप्तजन्म भवेद्रोगी जन्मजन्म दरिद्रता॥

स्त्रीतैलमधुमांसानि ये त्यजन्ति रवेर्दिने।
न व्याधिः शोकदारिद्र्यं सूर्यलोकं स गच्छति॥



**फलम्**

इदं शंकरेण उपदिष्टं सूर्याष्टकम्। इदं स्तोत्रः सूर्यः एव प्रजापतिः इति प्रस्तावयति। एतत् स्तोत्रपठनेन ग्रहपीडां निवार्यते। धनं सन्तानं च सञ्चयेत्। रोगाः न्यूनीभवन्ति। शोकाः अन्तर्धानं भवन्ति। विशेषतः रविवासरेषु यदि भवान् अनेन स्तोत्रेण सूर्यं प्रार्थयति तर्हि सर्वं प्राप्स्यति।

# आदित्य हृदयम्

ध्यानम्

नमस्सवित्रे जगदेकचक्षुषे जगत्प्रसूति स्थिति नाश हेतवे।
त्रयीमयाय त्रिगुणात्मधारिणे विरश्चि नारायण शङ्करात्मने॥

ततो युद्धपरिश्रान्तं समरे चिन्तया स्थितम्।
रावणं चाग्रतो दृष्ट्वा युद्धाय समुपस्थितम्॥ ॥१॥

दैवतैश्च समागम्य द्रष्टुमभ्यागतो रणम्।
उपागम्याब्रवीद्राममगस्त्यो भगवानृषिः॥ ॥२॥

राम राम महाबाहो शृणु गुह्यं सनातनम्।
येन सर्वानरीन्वत्स समरे विजयिष्यसि॥ ॥३॥

आदित्यहृदयं पुण्यं सर्वशत्रुविनाशनम्।
जयावहं जपेन्नित्यमक्षय्यं परमं शिवम्॥ ॥४॥

सर्वमङ्गलमङ्गल्यं सर्वपापप्रणाशनम्।
चिन्ताशोकप्रशमनमायुर्वर्धनमुत्तमम्॥ ॥५॥

रश्मिमन्तं समुद्यन्तं देवासुरनमस्कृतम्।
पूजयस्व विवस्वन्तं भास्करं भुवनेश्वरम्॥ ॥६॥



सर्वदेवात्मको ह्येष तेजस्वी रश्मिभावनः।
एष देवासुरगणान्ल्लोकान्पाति गभस्तिभिः॥ ॥७॥

एष ब्रह्मा च विष्णुश्च शिवः स्कन्दः प्रजापतिः।
महेन्द्रो धनदः कालो यमः सोमो ह्यपां पतिः॥ ॥८॥

पितरो वसवः साध्या ह्याश्विनौ मरुतो मनुः।
वायुर्वह्निः प्रजाप्राणा ऋतुकर्ता प्रभाकरः॥ ॥९॥

आदित्यः सविता सूर्यः खगः पूषा गभस्तिमान्।
सुवर्णसदृशो भानुर्हिरण्यरेता दिवाकरः॥ ॥१०॥

हरिदश्वः सहस्रार्चिः सप्तसप्तिर्मरीचिमान्।
तिमिरोन्मथनः शम्भुस्त्वष्टा मार्ताण्ड अंशुमान्॥ ॥११॥

हिरण्यगर्भः शिशिरस्तपनो भास्करो रविः।
अग्निगर्भोऽदितेः पुत्रः शङ्खः शिशिरनाशनः॥ ॥१२॥

व्योमनाथस्तमोभेदी ऋग्यजुः सामपारगः।
घनवृष्टिरपां मित्रो विन्ध्यवीथी प्लवङ्गमः॥ ॥१३॥

आतपी मण्डली मृत्युः पिङ्गलः सर्वतापनः।
कविर्विश्वो महातेजा रक्तः सर्वभवोद्भवः॥ ॥१४॥

नक्षत्रग्रहताराणामधिपो विश्वभावनः।
तेजसामपि तेजस्वी द्वादशात्मन्नमोऽस्तु ते॥ ॥१५॥

नमः पूर्वाय गिरये पश्चिमे गिरये नमः।
ज्योतिर्गणानां पतये दिनाधिपतये नमः॥ ॥१६॥

जयाय जयभद्राय हर्यश्वाय नमो नमः।
नमो नमः सहस्रांशो आदित्याय नमो नमः॥ ॥१७॥

नम उग्राय वीराय सारङ्गाय नमो नमः।
नमः पद्मप्रबोधाय मार्ताण्डाय नमो नमः॥ ॥१८॥

ब्रह्मेशानाच्युतेशाय सूर्यायादित्यवर्चसे।
भास्वते सर्वभक्षाय रौद्राय वपुषे नमः॥ ॥१९॥

तमोघ्नाय हिमघ्नाय शत्रुघ्नायमितात्मने।
कृतघ्नघ्नाय देवाय ज्योतिषां पतये नमः॥ ॥२०॥

तप्तचामीकराभाय वह्नये विश्वकर्मणे।
नमस्तमोभिनिघ्नाय रुचये लोकसाक्षिणे॥ ॥२१॥

नाशयत्येष वै भूतं तमेव सृजति प्रभुः।
पायत्येष तपत्येष वर्षत्येष गभस्तिभिः॥ ॥२२॥

एष सुप्तेषु जागर्ति भूतेषु परिनिष्ठितः।
एष चैवाग्निहोत्रं च फलं चैवाग्निहोत्रिणाम्॥ ॥२३॥

वेदाश्च क्रतवश्चैव क्रतूनां फलमेव च।
यानि कृत्यानि लोकेषु सर्व एष रविः प्रभुः॥ ॥२४॥

एनमापत्सु कृच्छ्रेषु कान्तारेषु भयेषु च।
कीर्तयन्पुरुषः कश्चिन्नावसीदति राघव॥ ॥२५॥

पूजयस्वैनमेकाग्रो देवदेवं जगत्पतिम्।
एतत्त्रिगुणितं जप्त्वा युद्धेषु विजयिष्यसि॥ ॥२६॥

अस्मिन् क्षणे महाबाहो रावणं त्वं वधिष्यसि।
एवमुक्त्वा तदाऽगस्त्यो जगाम च यथागतम्॥॥२७॥

एतच्छ्रुत्वा महातेजा नष्टशोकोऽभवत्तदा।
धारयामास सुप्रीतो राघवः प्रयतात्मवान् ॥२८॥



आदित्यं प्रेक्ष्य जप्त्वा तु परं हर्षमवाप्तवान्।
त्रिराचम्य शुचिर्भूत्वा धनुरादाय वीर्यवान् ॥२९॥

रावणं प्रेक्ष्य हृष्टात्मा युद्धाय समुपागमत्।
सर्वयत्नेन महता वधे तस्य धृतोऽभवत् ॥३०॥

अथ रविरवदन्निरीक्ष्य रामं
मुदितमनाः परमं प्रहृष्यमाणः।
निशिचरपतिसङ्क्षयं विदित्वा
सुरगणमध्यगतो वचस्त्वरेति। ॥३१॥

**फलम्**

आदित्यस्य हृदयं गायत्रीमन्त्रस्य मूर्तरूपम्। ये आदित्यहृदयं सन्ध्यासु जपन्ति ते गायत्रीमन्त्रजपफलं प्राप्नुवन्ति। आदित्यस्य हृदयं सर्वशत्रुनाशकम्। आदित्यस्य हृदयस्य आन्तरिकशत्रुबाह्यशत्रुनिकारात्मकतां च नाशयितुं शक्तिः अस्ति। आदित्यस्य हृदयं पठत् धर्मार्थ काममोक्षमपि प्राप्नोति।

इति आदित्य हृदयस्य फलम्।

# श्री देवराजाष्टकम्



श्रीमत् काञ्चीमुनिं वन्दे कमलापतिनन्दनम्।
वरदाङ्घ्रिसदासङ्गरसायनपरायणम्॥
देवराजदयापात्रं श्रीकाञ्चीपूर्णमुत्तमम्।
रामानुजमुनेर्मान्यं वन्देऽहं सज्जनाश्रयम्॥

नमस्ते हस्तिशैलेश! श्रीमन्नंबुजलोचनः।
शरणं त्वां प्रपन्नोऽस्मि प्रणतार्तिहराच्युत॥ ॥१॥

समस्तप्राणिसंत्राणप्रवीणकरुणोल्बण।
विलसन्तु कटाक्षस्ते मय्यस्मिन् जगतां पते॥ ॥२॥

निन्दिताचारकरणं निवृत्तं कृत्यकर्मणः।
पापीयांस ममर्यादं पाहि मां वरद प्रभो॥ ॥३॥

संसारमरुकान्तारे दुर्व्याधिव्याघ्रभीषणे।
विषयक्षुद्रगुल्माढ्ये तृषापादपशालिनि ॥४॥

पुत्रदारगृहक्षेत्रमृगतृष्णाम्बुपुष्कले।
कृत्याकृत्यविवेकान्धं परिभ्रान्तमितस्ततः ॥५॥

अजस्रं जाततृष्णार्तमवसन्नाङ्गमक्षमम्।
क्षीणशक्तिबलारोग्यं केवलं क्लेशसंश्रयम्॥ ॥६॥

संन्तप्तं विविधैर्दुःखैः दुर्वचैरेवमादिभिः।
देवराज! दयासिन्धो! देव! देव! जगत्पते॥ ॥७॥

त्वदीक्षणसुधासिन्धुवीचिविक्षेपशीकरैः।
कारुण्यमारुतानीतैः शीतलैरभिषिञ्च माम्॥ ॥८॥





**फलम्**

ये वरदराजष्टकं स्तोत्रं पठन्ति ते भगवतः वरदराजस्वामिनः प्रसादात् मानसिकीं शान्तिं प्राप्नुयुः। यावत् लोके तिष्ठन्ति तावत् लौकिकभोगान् प्राप्नुयुः। शरीरस्य निष्कासनानन्तरं पुरुषानन्दः श्रेष्ठः भवेत्

श्री न च रघुनाथाचार्यप्रणीता

# श्रीशेषाद्रीशस्तुतिः

## सुवर्णसौरभव्याख्यासमेता

व्याख्याता - डा. कन्दाल लक्ष्मीनारायणः - नेल्लूरु
चरवाणी - ९९८५२३७३५३

(तदनन्तरम्)

श्लो.१०.

**सेनानीश्शरणं ममास्तु सततं श्रीसूत्रवत्या स्सखा**
**शेषाद्रीशदिदृक्षया परिगतैः ऐश्वर्यदर्पा विलैः।**
**सम्मर्दक्षमरोषरूक्षविचलत् यद्वेत्र दण्डाहति-**
**त्रुट्यन्मौलिकिरीट कोटि मणिभिः सुत्राममुख्यैः स्थितम्।।**

ता- वैकुण्ठाख्यस्य भगवल्लोकस्य सेनानायकः विष्वक्सेनः। सोऽत्र वेङ्कटाचले विहरतः श्रीनिवासस्य दर्शनार्थं समागतानाम् ऐश्वर्यगर्वितानाम् इन्द्रादीनां सम्मर्दम् उपसंहर्तुकामः निजदण्डम् उग्रम् सवेगम् उद्धृत्य नियियंसति। तदा च तस्य दण्डाघातेन सुरपतिप्रभृतीनां किरीटेभ्योऽध पतिता मणय श्शकलिता भवन्ति। तादृशो विष्णुसेवारतः तत्सैन्याध्यक्षः तदायत्तनियमनशक्तिः सूत्रवतीपतिः विष्वक्सेनः सर्वदा मम रक्षको भवतु।

सु.सौ.व्याख्या - भगवत्पत्नीनां श्रीभूनीलादेवीनां प्रस्तुत्यनन्तरम् अस्मिन् श्लोके वासुदेव सैन्याधिपतिः विष्वक्सेनः आश्रीयते।

सेनानीः - सेना नयति इति सेना शब्द पूर्वक णीञ् धातोः ''सत्सू'' - ३.२.६१ इत्यादि सूत्रेण क्विप् प्रत्ययः। निजसेनां व्यूहक्रमेण युद्धे शत्रो रभिमुखं नयति इत्यर्थः। यद्यपि पार्वतीनन्दन स्स्कन्द स्सेनानी रग्निभूर्गुहः अमर१.१.३९. इति कोशानुसारेण योगरूढ्या च देवसेनापतिः कुमार इत्यर्थो गृह्येत, तथापि तस्यात्र अप्राकरणिकत्वात् प्रकरणानुगुणतया केवलं यौगिकार्थम् आदृत्य विष्वक्सेन



इत्येवार्थो बोध्यते। श्रीवैष्णवागमादिषु च अस्य सेनायनीकत्वं प्रसिद्धमेव यथा -

या निर्वहत्यनिशम् अङ्गुलिमुद्रयैव

सेनान्यम् अन्यविमुख स्तमशिश्रियाम् - रङ्गराज. पूर्व.५०

श्रीसूत्रवत्याः सखा - मङ्गलस्वरूपायाः सूत्रवतीदेव्याः सखा प्रियः। पतिरित्यर्थः। आगमग्रन्थेषु विष्वक्सेनाराधनविधौ सूत्रवती समेतस्यैव प्रतिष्ठादिकं विधीयते - 'विष्वक्सेनं सूत्रवत्या सहितं तत्र लेखयेत्। यथापूर्वं प्रतिष्ठादि सर्वसंस्कार संयुता' श्रीमन्नारायणसंहिता इष्टिवैभवकाण्डः ११.१४.तथैवात्रापि सूत्रवतीसमेत एव विष्वक्सेनः समाश्रीयते।

शेषाद्रीशदिदृक्षया - शेषाद्रीशस्य दिदृक्षा द्रष्टुम् इच्छा दिदृक्षा। शेषाद्रीशय्य इति कर्मणिषष्ठी। ब्रह्मजिज्ञासा इतियत् समासः शेषाद्रीशं द्रषु मिच्छया इत्यर्थः।

परिगतैः - परितः आगत्य समावृतैः। इन्द्रादीनां सुराणां खेचरत्वात् गगने भूमौ च सवेगं ते आगता इति भावः।

ऐश्वर्यदर्पाविलैः - ऐश्वर्येण योऽहङ्कारः प्राप्तः तेन कलुषिताः इन्द्रादय इति यावत्।' 'आर्तो जिज्ञासु रर्थार्थी ज्ञानी च, इति भगवद्वचनानुसारेण ऐश्वर्यावाप्तिकाङ्क्षया देवदेवम् आश्रित्य तदनुग्रहेण प्राप्तसम्पदो भूत्वा देवराजादय तेनैव कारणेन गर्विता अभूवन्। गर्व एतात्र दोषः। तेन पुनरपि ततोऽप्यधिकम् ऐश्वर्यं प्राप्तुं भूय एव ते श्रीनिवासस्य दर्शनार्थम् अहमहमिकया पुरस्स्थान् प्रणुदन्त स्सन्तो विष्वक्सेनेन हरिसैन्याध्यक्षेण नियमिता अभूवन्।

सुत्राममुख्यैः स्थितम् - मुखे भवः मुख्यः अग्रेसरः नायक इत्यर्थः। सुत्रामा इन्द्रः। सुत्रामा गोत्रभिद्वज्री - १.१.४२ इत्यमरः। स मुख्यो येषां ते सुत्राममुख्याः देवगणा इत्यर्थः। विष्वक्सेन दण्डाहतास्ते खण्डितकिरीटाग्रमणयो भूत्वा पुर श्चलितुम् अशक्तास्सन्तो गर्वम् अशेषं परित्यज्य तत्र तत्रैव तिष्ठन्त आसन्। एतेन विष्वक्सेनस्य नियमनातिशयो व्यज्यते।

शरणम् अस्तु - रक्षणहेतुः भूयात्।''शरणं गृहरक्षित्रोः ३.३.५३ इत्यमरः। विष्वक्सेनो मे रक्षको भूयादित्यर्थः। अथवांउपाये गृहरक्षित्रोः शब्द श्शरणमित्ययम् वर्तते साम्प्रतं चैष उपायार्थैकवाचकः। ३६.३६. इति अहिर्बुध्न्यवचनानुसारेण शरणशब्दः उपायाद्धच इत्यर्थमपि बोधयति इति ज्ञायते। ततश्च विष्वक्सेनो मे उपायभूतो भवतु इत्यर्थस्सिद्धयति। अहं दूरतस्ते इत्युक्तरित्या वेङ्कटेश्वरस्वामिनो दर्शनार्थम् आगतस्य भक्तस्य मम स्वामिदर्शने उपायभूतो भवतात् इत्यभिप्रायः। युज्यते च - दर्शनार्थम् आगतानाम् इन्द्रादीनापि क्रमनिर्वाहकस्य विष्णुसेनापतेः स्वामिदर्शन विषये उपायत्वम्॥

वृत्तम् अत्र शार्दूल विक्रीडितम् - सूर्याश्वैर्मसजास्ततास्सगुरवः शार्दूलविक्रीडितम् - इति लक्षणम् उक्तम्॥

(अनुवर्तिष्यते)



# डिसेम्बर् २०२३
## लघुप्रश्नोत्तरी समाधानानि

१. बृहन्नला
२. अम्बिकायाः
३. भीमः
४. केकसी
५. शान्ता
६. हिमवान्
७. शचीदेवी
८.रावणस्य पुत्रः
९. सूर्यः
१०. रावणासुरस्य
११. वराहः
१२. सरयू नद्याः
१३. अथर्ववेदे
१४. गणेशः
१५. त्रेतायुगे

# भीष्मैकादशी

डा. के.सूर्यनारायण रेड्डी
चरवाणी - ८१०६५७८२५०

माघशुद्धैकादशी भीष्मैकादशीति ब्रुवन्ति। महाभारतसंग्रमानन्तरं भीष्मः कुरुक्षेत्रे शरशय्यागतः भगवन्तं श्रीकृष्णं स्मरति स्म। श्रीकृष्णः धर्मराजमुद्दिश्य एवं ब्रवीति अद्य भीष्मपितामहः मरणासन्नव्यक्तिः। सर्वशास्त्राध्येता भवसागरतारणोपाया सर्वे तेन विदिताः। सः प्राप्तस्वच्छन्दमरणः। सः अद्य उत्तरायणपुण्यकालं प्रतीक्षते। तदनन्तरं धर्मसूक्ष्मविषये वक्ता कोऽपि न स्यात्। एतद्वचनं श्रुत्वा द्रौपदीसहिताः पाण्डवाः भीष्मं नमस्कृत्य विनम्राः तदा भीष्मः। धर्मराजं सम्बुद्ध्य एवं ब्रवीति - सामदान भेददण्डोपायैः राज्यपालनं राजधर्मः। निर्दोषिणः न कदापि दण्ड्याः। अयं धर्मसूक्ष्मः। इन्द्रियनियन्त्रणं अत्यावश्यकम्। अनेनैव मार्गेण राजा सुरक्षितः स्यादिति तदा द्रौपदी भीष्ममुद्दिश्य राजसभायां मम वस्त्रापहरणसमये भवन्तः नतमस्तकाः तूष्णीभावं वहन्तः आसन्। कारणं किमिति - तदा भीष्मः ''अहं कौरवैः पोषितः। अतः तव अन्यायं पश्यन्नपि तूष्णीमभवमित्युक्तवान्। भीष्मः पितुः शन्तनाः विवाहार्थं राज्यपालनविवाहत्यागौ चकार। अतः तस्य प्रतिज्ञां भीष्मप्रतिज्ञेति वदन्ति। ततः कृष्णः पाण्डवान् दृष्ट्वा अयं पवित्रः एकादशीदिवसः। अस्मिन् दिने सर्वेषां पितामहः विष्णुः युष्माकं सहस्रनामानि उपदेक्ष्यतीति। भीष्मः तदा कृष्णं प्रणम्य पाण्डवेभ्यः विष्णुसहस्रनामानि उपदिदेश। भीष्मैकादश्यामेव इयं दिव्यघटना घटिता। अत एव भीष्मैकादशीं विष्णुसहस्रनामजयन्ती इत्यपि कथयन्ति। कुरुक्षेत्रे भीष्मः शरशय्यायां ५८ दिनपर्यन्तमासीत्। उत्तरायणपुण्यकाले श्रीकृष्णं स्मृत्वा प्राणत्यागञ्चकार।

भीष्मैकादश्यां धान्यवस्त्रादीनां ब्राह्मणेभ्यः दानेन शुभफलं सर्वेषां स्यात्। उपवासोऽपि तस्मिन्दिने पुण्यप्रद एव। माघशुद्धाष्टमीतः द्वादशीपर्यन्तं दिनपञ्चकं भीष्मपञ्चकमिति व्यवहरन्ति। एषु दिनेषु विष्णुसहस्रनामपारायणं, भागवतपठनं श्रवणं धार्मिकक्रियाचरणं पापनाशकं पुण्यप्रदं भवेत्। भीष्मैकादश्यां भीष्मोपदेशानुकरणं आध्यात्मिकजीवनयापनं अनन्तफलप्रदं स्यात्।

सर्वशास्त्रमर्पज्ञं वन्देऽहं भीष्मपितामहम्





# मनसः स्वच्छता

"बाल्यादेव द्विवारं स्नानं करोमि स्म अहम्।" श्यामेन कथा आरब्धा। "द्विवारं स्नानस्य अभ्यासः उत्तमः एव। रात्रौ निद्रायाः पूर्वं स्नानं कुर्मः चेत् शरीरं स्वच्छं, सतेजः लघुभारमिव च भासते। निद्रायाः पूर्वं वयं प्रार्थनां कुर्मः एतत् भवति मनसः स्नानम्। शरीरं मनः च स्वच्छे तर्हि निद्रा उत्तमा भवति।

एकदा प्रतिदिनमिव खेलित्वा अहं गृहम् आगत्य स्नानार्थं गतवान्। सायङ्कालस्य स्नानार्थं अधिकस्य जलस्य आवश्यकता न भवति। स्नानं समाप्य मया उक्तम्, "अम्ब, शुष्कय मे अङ्गम्। जलं समाप्तं सत्वरं शुष्कय मे अङ्गम्" इति उच्चैः अवदम् अहम्। सायङ्काले मे माता स्वशाटिकया एव मम शरीरं मार्जयति स्म।

माता आगता, मम अङ्गं मार्जितवती आज्ञां च दत्तवती "देवपूजार्थं पुष्पाणि आनय, श्याम" इति। "अहमुक्तवान् मम पादतलौ आर्द्रौ स्तः। मृत्तिकया मलिनौ भविष्यतः। अतः मम पादतलौ अपि स्वच्छीकुरु।" इति माता उक्तवती पादतलौ आर्द्रौ स्तः तर्हि किं जातं रे श्याम? अधुना केन वस्त्रेण मार्जयामि?" "अम्ब, तव शाटिकाञ्चलं पाषाणे विस्तारय।" "श्याम, अतीव हठस्वभावः असि। ' इति उक्त्वा मात्रा शाटिकाञ्चलं विस्तारितम्। अहं चरणौ तदुपरि स्थापयित्वा शुष्कौ कारयित्वा निर्गतवान्। मातुः वस्त्रम् आर्द्रम् अभवत्।

तस्मिन् समये तया शाटिकापरिवर्तनं कर्तुं न शक्यते इत्यपि मया न चिन्तितम्।परन्तु पुत्रचरणौ मलिनौ न भवेताम्, पुत्रेच्छा पूर्णा भवेत् एतदर्थं तया स्वशाटिका आर्द्रा कृता। माता पुत्रार्थं किं किं न करोति, किं किं न सहते, किं किं न समर्पयति? अहं गृहस्य अन्तर्भागं गतवान्, पूजार्थं पुष्पाणि स्थापितवान्। माता दीपं गृहीत्वा आगतवती उक्तवती च, "श्याम, चरणौ मलिनौ न भवतः अतः यथा प्रयतसे तथैव मनः मलिनं न भवतु एतदर्थम् अपि प्रयतस्व। प्रार्थय देवं शुद्धबुद्ध्यर्थम्।"

भो मित्राणि, कियन्तः मधुराः शब्दाः! पावित्र्यार्थं स्वच्छतायै वयं प्रतिदिनं प्रयतामहे। वस्त्रस्वच्छतार्थं क्षालनचूर्णम् अस्ति, शरीरार्थं चन्दनफेनकानि सन्ति। शरीरं वस्त्राणि च मलिनानि न भवन्तु अतः सर्वे प्रयत्नं कुर्वन्ति। अपि वयं मनसः स्वच्छतायै प्रयतामहे?"



चित्रकथा

# अस्माकं किमपि न भवति

तेलुगुमूलम् - डा.कम्पेल्ल रविचन्द्रन्
चित्राणि - तुम्बलि शिवाजी
संस्कृतानुवादः - का. भास्करः
चरवाणी - ८१४३१५०८३३

एकदा श्रीनिवासनायकस्य धर्मपत्नी सरस्वतीबायि समीपे एकः ब्राह्मणः सहायार्थमागतवान्।

अम्ब! सरस्वतीबायी! दीर्घसुमङ्गली भव। भवत्याः (त्वत्) एकं साहाय्यं आवश्यकम्। मम पुत्रस्य विवाह निश्चयः जातः। हस्ते किमपि धनं नास्ति। तव सहायार्थमागतोऽस्मि। शतं रूप्यकाणि दानं कृत्वा पुण्यं सम्पादयतु माता।

स्वामिन्! मम समीपे तावत् धनं कथं भवति?

तथा न वक्तव्यम्। नवकोटि नारायण इव ख्यातिं गतः श्रीनिवासनायकः एव तव पतिः। तर्हि धनस्य अभावः कथम् ? यदि भवती दयां करोति चेत्...

स्वामिन्! गृहावसरान् सर्वान् स एव पश्यति मम धनस्य आवश्यकता नास्ति। तदर्थं तावत् धनं मम सविधे भवितुं न शक्यते।

अस्य साहाय्यम् अल्पम् एव।

अम्ब! तव पत्युः धनस्य विषये भवती प्रायः अस्वतन्त्रा भवति। परं भवत्याः सकाशे स्त्रीधन विषये स्वतन्त्रा खलु!

तर्हि मम कष्टं कथं गच्छति?

झटिति सा तस्याः नासिकाभरणं निष्कास्य ददाति।

क्षम्यतां स्वामिन्! एतदेव दातुं शक्नोमि?

पुत्रपौत्रैः बहुकालं वर्धताम्।

स्वामिन् श्रीनिवास! अस्य आभरणस्य मूल्यं दृष्ट्वा धनं ददातु।

एतत् कुत्रापि दृष्टवान्। भवतु, प्रतिदिनं बहूनि आभरणानि पश्यामि। एतेषु एकं भवति स्यात् ।


भवत्याः नासिकाभरणं कुत्र?
आ! नासिकाभरणम् ... अस्ति...
एकवारं दर्शयति वा? शीघ्रं नास्तिः.. भोजनानन्तरमेव....


परन्धाम! पाण्डुरङ्ग! मां क्षम्यताम् अन्यः मार्गः नास्ति। तदर्थमेव एतं विषं स्वीकुर्वन्नस्मि।


सरस्वतीबायि विषपात्रं मुखस्य समीपं यदा आनयति तदा तस्याः नासिकाभरणं विषपात्रे पश्यति। सा आश्चर्यं गता। भगवतः करुणया आनन्दा जाता।


एतत् कथं सम्भवम्? तालः स्थापितः इव एव अस्ति। परं नासिकाभरणं अदृश्यं जातम्।


अहं आपणे कोशे स्थापितवान् नासिकाभरणं अदृश्यं जातम्। यदि वृद्धः आगत्य पृच्छति चेत् किं समाधानं वक्तव्यम्?
एतद् स्वीकृत्य तस्य ददातु।


एतद् तव मातापितरौ दत्तवन्तौ। अहं न स्वीकरोमि।
तद् अद्य एव एकस्य वृद्धस्य दानं कृतवती।एतद् परन्धामस्य प्रसादः।
इति भर्तारं सर्वं वृत्तान्तम् उक्तवती।


छी...छी....। अहं पापात्मा। एताः सम्पदः मम महत्वात् एव आगताः इति भ्रान्त। सर्वं दैवानुग्राहः इति ज्ञातुं असमर्थः भूत्वा मम मनुष्याणां कष्टसुखेषु भागं न स्वीकृतवान्। ईश्वरतः दूरं गतोऽस्मि।
20


भगवतः महिम्ना श्रीनिवासे महापरिवर्तनं जातम्। तस्य सर्वसम्पदः दानं कृत्वा, पट्टिकावस्त्रैः भार्यया सह पण्डरीपुरं गत्वा याचकवृत्तिम् अनुसृत्य आदिवारात्रम् रङ्गनाथस्य सेवायां जीवं यापयति।
स्वस्ति

प्रदत्तं चित्रपटम् बिन्दुसाहाय्येन पूरयामः वा?

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?

बा
ल
वि
नो
दि
नी







## रसप्रश्नाः

१. महाभारतयुद्धं कति दिनानि अभवत्?

२. कुचेलस्य निज नाम किम्?

३. अज्ञातवाससमये भीमस्य नाम किम्?

४. अज्ञातवाससमये द्रौपद्याः नाम किम्?

५. विष्णुसहस्रनाम स्तोत्रं कस्मिन् पर्वणि भवति?

६. रावणस्य कनिष्ठ भ्राता कः?

(समाधानानि १. अष्टादश दिनानि,२. सुदामा,३.वललः,४.सैरन्ध्री,५.भीष्मपर्वणि ६.विभीषणः)

## सद्वाक्यं

### द्विविधम्

यदि त्वं सम्यक् न पठसि तर्हि त्वं तस्य सदृशः भविष्यसि





नकारात्मक पद्धतिः

त्वं सम्यक् पठित्वा एतादृशानां जनानाम् उत्तमं जीवनं दातव्यम्





सकारात्मक पद्धतिः



# लघुप्रश्नोत्तरी



तिरुमलतिरुपतिदेवस्थानानि



१९

ऐदंप्राथम्येन सप्तगिरिमासपत्रिकायां लघुप्रश्नोत्तरी इति स्पर्धाकार्यक्रमः आयोजितः यत्र एतन्मासीयपत्रिकायां प्रकटितविषयाधारिताः प्रश्नाः भवेयुः। अतः हे बालबालिकाः! प्रतिमासम् इमां पत्रिकां पठित्वा उत्तरदानप्रक्रियायां सक्रियं भागं वहन्ति खलु!

१. कृष्णाष्टमी कस्मिन् मासे आगच्छति?
२. कृष्णचारित्र्यमञ्जरी कस्य ग्रन्थः?
३. कृष्णचारित्र्यमञ्जरी भागवते कस्य स्कन्धस्य सङ्ग्रहः?
४. तिरुक्करम्बनूर् कुत्र वर्तते?
५. महाभारत रचनाकालः कति वत्सराः अभवत्?
६. तिरुमले विद्यमान सुप्रसिद्ध पुष्करिण्याः नाम किम्?
७. श्रीनिवासस्य ब्रह्मोत्सवे कस्मिन् नक्षत्रे अवभृथस्नानं भवति?
८. श्रीनिवासस्य रथोत्सवः कस्मिन् दिने भवति?
९. प्रतिदिनं सहस्राणां भक्तानां कृते अन्नदानं कुर्वाणस्य भवनस्य नाम किम्?
१०. वैखानस आगमः कस्य वेदस्य अन्तर्भागः?
११. धर्मराजस्य अपरं नाम किम् ?
१२. महाभारतं केन विरचितम्?
१३. पीताम्बरः इति कस्य नाम?
१४. महाभारते ''कृष्णा'' इति का कथ्यते?
१५. रामायणे भरतस्य पत्नी का?

## समाधानानि

| समाधानानि |
|---|
| १. |
| २. |
| ३. |
| ४. |
| ५. |
| ६. |
| ७. |
| ८. |
| ९. |
| १०. |
| ११. |
| १२. |
| १३. |
| १४. |
| १५. |

## नियमावालिः

१. केवलं १० तः १५ वर्षीयाः बालाः हैन्दवाः अत्र भागं ग्रहीतुमर्हन्ति।
२. बालकर्णस्य गुरुः कः? परशुरामःयाम् एव उत्तरं विलिख्य तत्पत्रं The Chief Editor Office, Sapthagiri, T.T.D. Press Compound, K.T.Road, Tirupati 517507, प्रति २५ दिनाङ्कात् पूर्वं प्रेषयेयुः। प्रतिकृतीः (Xerox) नैव स्वीक्रियन्ते।
३. बालानां पितरः मासपत्रिकाग्रहीतारः (Subsribers) भवेयुः। तत्र नाम, सङ्केतः, दूरवाणीसङ्ख्या च उत्तरपत्रिकायां देया एव।
४. समाधानेषु त्रुटयः, समीकरणानि च न भवेयुः।
५. सर्वेषां प्रश्नानां समीचीनसमाधानं दत्तवतां त्रयाणां बालानां चयनं DIP द्वारा क्रियते।
६. विजेतॄणां नामानि अग्रिममासीय सप्तगिरि पत्रिकायां प्रचुरितानि भवन्ति।
७. Chief Editor कार्यालयीयकार्यकर्तृपुत्रपुत्रिकाणां च अत्र अवकाशो नास्ति।
८. अस्य कार्यक्रमस्य समाचारः दूरवाणीद्वारा नैव दीयते।
९. उत्तराणि प्रेषयितुम् अन्तिमतिथिः २५.०२.२०२४ अस्ति।

Subscription Number :
Name :
Mother :
Father :
Address :
Phone Number :

Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507. Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.



आन्ध्रप्रदेश राज्यपालः गौ।। एस्.अब्दुल् नजीर् महोदयाः 19-12-2023 दिनाङ्के तिरुमल श्रीस्वामिनः दर्शनं कृतवन्तः। राज्यपाल महोदयस्य ति.ति.दे. कार्यनिर्वहणाधिकारी श्री ए.वि.धर्मारेड्डि, ऐ.डि.ई.एस्., महोदयः स्वागतं कृतवान्। दर्शनानन्तरं श्रीस्वामिनः तीर्थप्रसादान् स्वामिनः चित्रपटं ति.ति.दे. दिनचर्या पुस्तकम् अपि च पञ्चाङ्गम दत्तवान्।



19.12.2023 दिनाङ्के तिरुमल श्रीस्वामिनः देवालये आयोजित कोयिलाळ्वार् तिरुमञ्जन कार्यक्रमे ति.ति.दे. पालकमण्डलि अध्यक्षः श्री भूमन करुणाकररेड्डि, ति.ति.दे. कार्यनिर्वहणाधिकारी श्री ए.वि.धर्मारेड्डि. ए.डि.ई.एस्., महोदयाः भागं गृहीतवन्तः।



२६-१२-२०२३ दिनाङ्के आयोजित ति.ति.दे. पालकमण्डलि मेलने ति.ति.दे. पालमण्डलि अध्यक्षः श्री भूमन करुणाकर रेड्डि, ति.ति.दे. कार्यनिर्वहणाधिकारी श्री ए.वि. धर्मारेड्डि ऐ.डि.ई.एस्., पालकमण्डलि सदस्याः मिलित्वा विंशति पुट युक्तस्य ''मानवुलन्दरिकी भगवद्गीता'' इति पुस्तकस्य आविष्करणं कृतवन्तः।



ति.ति.दे. स्विम्स् मध्ये अंकालजी प्रत्येक अधिकारी डा।। एम्.जयचन्द्रारेड्डि महोदयः ''यंग् सर्जन् आफ् इण्डिया'' इति प्रतिष्ठात्मकं पुरस्कारं स्वीकृतवान्। अस्मिन् सन्दर्भे ति.ति.दे. कार्यनिर्वहणाधिकारी श्री ए.वि.धर्मारेड्डि., ऐ.डि.ई.एस्., ति.ति.दे. सम्युक्तकार्यनिर्वहणाधिकारिणी श्रीमती सदाभार्गवी, ऐ.ए.एस्., अभिनन्दितवन्तः।



23-12-2023 दिनाङ्के ति.ति.दे. निर्देशत्वे आयोजित गीताजयन्ती कार्यक्रमे भगवद्गीता श्लोक पठन स्पर्धायां विजेतॄणां कृते ति.ति.दे. सम्युक्तकार्यनिर्वहणाधिकारिणी (हेचू&ई) श्रीमती सदा भार्गवी, ऐ.ए.एस्., पुरस्कार प्रदानं कृतवती।




श्रीवेङ्कटेश्वर आयुर्वेदकळाशाला ति.ति.देवस्थाने आयुष् मन्त्रित्वशाखा निर्देकशत्वे आयोजित सि.एम्.ई. शिक्षणा कार्यक्रमे ति.ति.दे. संयुक्तकार्यनिर्वहणाधिकारिणी श्रीमती सदा भार्गवी ऐ.ए.एस्., भागं गृहीत्वा भाषणं दत्तवती। तत् दृश्यम्।



SAPTHAGIRI (SANSKRIT) SPIRITUAL ILLUSTRATED MONTHLY PUBLISHED BY TIRUMALA TIRUPATI DEVASTHANAMS
PRINTING ON 25-01-2024 & posting at Tirupati RMS Regd.with the Registrar of Newspapers for India under RNI No.21138/1970 Postal Regd. No. TRP/154/2024-2026" LICENCED TO POST WITHOUT PREPAYMENT No.PMGK/RNP/WPP-04(4)/2024-2026" Posting on 5th of every month.

# रथोत्सवः

(16-02-2024)

देवुनि कडपस्थ

## श्रीलक्ष्मीवेङ्कटेश्वरस्वामिनः ब्रह्मोत्सवाः

(09-02-2024 तः 18-02-2024 पर्यन्तम्)